तेन संवत्सरोपरि भौर्द्धदेहिककरणं कार्यं ततस्तच्छुद्धयापनेयं पापं न नाशयेत् अतो देशविशेषव्यवस्थितत्वमेव युक्तम्।

अतएवादिपुराणवचने क्वचिद्देशे क्रियते इति परम्परया प्राप्त-मनुष्ठानमनुदितं मातुलकन्यापरिणयनादिवत्।

यदपि विष्णुवचने कुर्य्यादित्युक्तं तदपि देशविशेषवासिसमस्त-जनानुष्ठीयमानानां परम्परया प्राप्तानामाचाराणां[1] नृपतेर-वारणीयत्वात् प्रजोद्वेगनिवृत्त्यर्थं कर्त्तव्यताभ्यनुज्ञानम्।

अतएव प्राच्यदाक्षिणात्योदीच्यदेशव्यवस्थिताऽनाचारविशेषा-नुदाहृत्य वृहस्पतिनोक्तम्।

अनेन कर्म्मणा नैते प्रायश्चित्तदयावहाः।
विहिताकरणात् किन्तु प्रतिषिद्धनिषेवणात्।
भक्ताच्छादं प्रदायैषां शेषं गृह्णीत पार्थिवः॥

इति यत् निषिद्धक्रियानिवृत्तिहेतू प्रायश्चित्त—दण्डौ तत् परम्पराप्राप्त(ना)चारकरणे सति न कार्य्यौ तादृशस्यानाचारस्य निवर्त्तने प्रजासंक्षोभप्रसङ्गात्।

अत[2]स्तादृशमाचारमनुपाल्य स्वकुटुम्बभक्ताच्छादनादधिकं सर्व्वस्वं नृपतिना ग्राह्यमित्युक्तम्।

गौतमः—

यैस्य प्राणान्तिकं प्रायश्चित्तं स मृतः शुद्ध्येत तस्मिन्नुदका-दीनि प्रेतकर्म्माणि कुर्य्युः।

---

(१) कं ग अनाचाराणाम्।

(२) च तादृशमनाचारम्।

प्राप्तान्तिकप्रायश्चित्तानुष्ठानात् [1]स्वयं कृतस्य यद्वाकृतात् सर्व्वं प्रेतकार्य्यं कर्त्तव्यमित्यर्थः।

अनेनैवाव्यवहृतस्य न कार्य्यमित्युक्तम्। अतः कथमविशुद्धस्यैवात्मघातिनोऽपि संवत्सरोपरि क्रियते। इति।

सुरापगातीरविहारपाटके[2]
निवासिना भट्टनयार्थवेदिना।
कृताऽनिरुद्धेन सतामुरःस्थले
विराजतां हारलतेयमर्पिता॥

इति चाम्पाहट्टीयमहोपाध्यायधर्म्माध्यक्षश्रीमदनिरुद्ध-विरचिताऽशौचव्यवस्था हारलता समाप्ता।

ॐ रामः।

सम्पूर्णोऽयं ग्रन्थः।

ॐ तत्सत्।

(१) ख तस्य।
(२) ख पट्टके।